KÂVYAMÂLÂ. 20.



THE

# LATAKAMELAKA

OF

# S'ANKHADHARA.



EDITED BY

MAHÂMAHOPÂDHYÂYA PAṆDIT DURGÂPRASÂDA

AND

KÂS'ÎNÂTH PÂṆDURANG PARAB.

**Second Revised Edition.**



PRINTED AND PUBLISHED

BY

TUKÂRÂM JÂVAJÎ

PROPRIETOR OF JAVAJI DADAJI'S "NIRNAYA-SAGARA" PRESS.

BOMBAY.

1900.

*Price 4 Annas*

काव्यमाला. २०.

श्रीशङ्खधरविरचितं

# लटकमेलकम् ।

जयपुरमहाराजाश्रितेन पण्डितव्रजलालसूनुना महामहोपाध्याय-
पण्डितदुर्गाप्रसादेन, मुम्बापुरवासिना परबोपाह्व-
पाण्डुरङ्गात्मजकाशीनाथशर्मणा च
संशोधितम् ।

द्वितीयं संस्करणम् ।

तच्च
मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीतम् ।

१९००



मूल्यं ४ आणकाः ।

# काव्यमाला।

महाकविश्रीशङ्खधरविरचितं

लटकमेलकम्[2]।

प्रथमोऽङ्कः।

गौरीचुम्बनचञ्चलाञ्चलवलच्चन्द्रप्रभामण्डलं
व्यावल्गत्फणिकुण्डलं रतिरसप्रस्विन्नगण्डस्थलम्।
प्रौढप्रेमपरम्परापरिचयप्रोत्फुल्लनेत्राञ्चलं
शंभोरस्तु विभूतये त्रिजगतामुन्मत्तगङ्गं शिरः॥ १॥

अपि च।

रक्षाक्षावलिमाः परित्यज जटाः कोऽयं मदप्रक्रमः
कौपीनं त्यज मुञ्च मुञ्च नखरव्यापारमास्थानिकम्।

१. अयं लटकमेलकप्रणेता शङ्खधरकविः कान्यकुब्जदेशे खिस्ताब्दद्वादशशतके समुत्पन्न इति प्रतीयते, यतोऽनेन प्रस्तावनायां महामाण्डलिकाधिराजो गोविन्दचन्द्रमहीपतिर्वर्ण्यते स्म. स च द्वादशशतके कन्नौजनगरे राज्यं कुर्वन्नासीदिति इण्डियन् आण्टिक्वेर्यादिमुद्रिततत्तद्दानपत्रेभ्योऽवसीयते. अथ चात्र ग्रन्थे गृहीतानि कतिपयग्रामनामानि कान्यकुब्जदेशीयग्रामनामसरणिमनुसरन्ति. 'कतिपयनिमेष-', 'एष स्वर्गतरङ्गिणी-', इति पद्यद्वयं शार्ङ्गधरपद्धतौ, 'गुरोर्गिरः पञ्च-' इति पद्यं साहित्यदर्पणे च लटकमेलकादुद्धृतमस्ति. अथ च साहित्यदर्पण-षष्ठपरिच्छेदे संकीर्णप्रहसननिरूपणप्रकरणे 'यथा लटकमेलकादि' इत्युक्तमस्ति. अतोऽपि चतुर्दशशतकात्प्राचीनोऽयं कविरिति ज्ञायत एव. एतन्मुद्रणावसरे चास्माभिः पुस्तकत्रयमासादितम्. तत्र क—केवलदासात्मजेन भगवानदासश्रेष्ठिना सूरतनगरात्प्रहितं प्रथमपत्ररहितं प्रायः शुद्धं प्राकृतच्छायासमेतं १६०८ मिते विक्रमाब्दे लिखितमस्ति. तत्पत्राणि २१. ख—जयपुरीयराजगुरुपर्वणीकरनारायणभट्टसंग्रहादुपलब्धं नातिशुद्धं नवीनतरं च. तत्पत्राणि २१. ग—अस्मदीयमेव. तदपि नवीनम्, किंतु १६५३ मिते विक्रमाब्दे लिखितस्य प्रायःशुद्धस्य कस्यचित्पुस्तकस्य प्रतिरूपकम्. तत्पत्राणि ८. २. 'लटको दुर्जनः' इत्युणादिसूत्रवृत्तावुज्ज्वलदत्तः. लटकानां मेलकः संघटनं यत्र तल्लटकमेलकम्.

इत्युद्भ्रान्त इवोल्लपन्नवतु वो मन्दं निकुञ्जोदरे
रुद्राणीसुरतप्रबन्धविकलः खण्डेन्दुचूडामणिः ॥ २ ॥

अपि च ।

प्रातः सहस्रकिरणप्रणिपातभीरुः
कक्षातटप्रणयिनीं मदनप्रशस्तिम् ।
आस्तां जगत्त्रयमुदे तिरयन्भुजाभ्यां
गौरीनखक्षतिपदावलिमिन्दुमौलिः ॥ ३ ॥

(नान्द्यन्ते)

**सूत्रधारः**—अलमतिविस्तरेण । यतः ।

गोविन्ददेवः प्रथितः पृथिव्यां श्रीमान्महामाण्डलिकाधिराजः ।
कविप्रियो नाटकदर्शनार्थमादेशयन्मां रणरङ्गमल्लः ॥ ४ ॥

यदद्य वसन्तसमयसमुचितेन कविराजश्रीशङ्खधरविरचितेन लटकमेलकनाम्ना प्रहसनेनास्मान्विनोदयेति । अस्य च सकलराजचक्रवालकुलकमलवनविकासभास्करस्य प्रत्यर्थिपार्थिवमहार्णवमथनाकुलितदिकुञ्जरकदम्बस्यार्थिजनतापतस्करस्याज्ञा कस्य न करणीया । तथा हि ।

निस्त्रिंशक्षतकुम्भिकुम्भविगलन्मुक्ताकलापाङ्कुराः
कङ्कालामलकर्पराः पतदसृक्पङ्कप्रलिप्तोदराः ।
मज्जद्भूधरकोटिमन्थनकलादत्तारिवीरश्रियो
येनैता विहिताः पयोधिविषमा भीमा रणक्षोणयः ॥ ५ ॥

अपि च ।

येन गभीरे समरे रिपुगणमुन्मथ्य मार्गणैरगणैः ।
मार्गणनिवहविलब्धाश्चित्तचमत्कारकारिणः करिणः ॥ ६ ॥

(नेपथ्ये ।)

अये, कोऽयमनेकपण्डितमण्डितायां सभायां कविराजतां नाटयितुमुद्यतः।

---

१. 'सहस्रनयन' ग. २. 'कक्षान्तर' ग. ३. 'यतः' ग-पुस्तके नास्ति. ४.'नाटकनर्तनार्थं' क-ग. ५. 'रतिरङ्गमल्लः' ख. ६. 'राजकुल' ग. ७. 'कमलकलिका' क. ८. 'महार्णवमन्दरस्यार्थि-' क.

**सूत्रधारः**—अलमतिप्रलपितेन । यतः ।

चित्रं चरित्रं स्खलितव्रतानां शीलाकरः शङ्खधरस्तनोति ।
विद्वज्जनानां विनयानुवर्ती धात्रीपवित्रीकरणः कवीन्द्रः ॥ ७ ॥

किं च । गोविन्द[1]राजपुरस्कृतायाः सरस्वत्याः कुतो दुर्जनतर्जनावकाशः । उक्तं च तेनैव कविना—

वक्रा विश्वविरोधिनः कतिपये द्वित्राः पवित्राशयाः
क्रूरोक्तिप्रकरोद्धुराश्चिचतुरा दोषोन्मुखाः पञ्चषाः ।
दृष्टः क्वापि लसद्द्विजिह्वदमनव्यापारली[2]लानिधे-
र्गोविन्दादपरः परः परगुणग्राही न कश्चित्पुनः ॥ ८ ॥[3]

अन्यच्च[4] ।

कतिपयनिमेषवर्तिनि जन्मजरामरणविह्वले जगति ।
कल्पान्तकोटिबन्धुः स्फुरति कवीनां यशःप्रसरः ॥ ९ ॥

(नेपथ्ये ।)

मुखकमलं परिचुम्बन्न[5]लिभरदरदलितपद्मिनीनिवहः ।
अयमुपसर्पति मन्दश्चन्दनवनपावनः पवनः ॥ १० ॥

**सूत्रधारः**—(आकाशे कर्णं दत्त्वा ।)

द्विमुखानां पटुडिण्डिमगोमु[6]खझिल्लीमृदङ्गपटहानाम् ।
अयमपरः श्रुतिहारी विहरति गगनाङ्गणे निनदः ॥ ११ ॥

(पुरो[7]ऽवलोक्य ।) अये, दन्तुरायाः कुट्टन्याः पुरतो भुजंगसंगीतकं वर्तते । तदुपसर्पामि । (इति निष्क्रान्तः ।)

## प्रस्तावना ।

१. 'गोविन्ददेव' क; 'गोविन्ददेवेश्वर' ख. २. 'लीलानिधिः' ग. ३. अस्मादनन्तरं क-पुस्तके "देवदेवप्रतिमः केन न वन्द्यते दुर्जनः । 'शूली गुणग्रहविधौ स्वजनेषु चक्री विश्वापकाररचने चतुराननोऽसौ । दोषं निरीक्षयितुमेष सहस्रनेत्रः किं वर्ण्यतेऽमरवरप्रतिमो द्विजिह्वः ॥" इत्यधिकमस्ति. ४. 'अपि च' क; 'किं च' ग. ५. 'रतिरसपरिमलित' क; 'अतिभरदलमलित' ग. ६. 'गोमुखलाञ्छव' ख. ७. 'श्रुत्वा पुरोऽवलोक्य च' ख.

(ततः प्रविशति दन्तशूलग्रामीणा दन्तुरा नाम कुट्टनी ।)

दन्तुरा—(परिक्रम्यावलोक्य च ।) एसो सो मत्तकलकण्ठकलअलाकुलिअदसदिम्मुहो वसन्तसमअसमारम्भो वट्टदि । ता किं ण गिण्हदि बन्धईकदं भूइभाअणं दरिहडागामीणो तवसिओ अण्णाणराशिः । अण्णं अ हग्गउलीगामीणेण जडासुरदिअम्बरेण ण इच्छिआ पिच्छिआ । सुण्डिवालगामीणेण सहासालिणा महोपज्झाएण वि बन्धअं कदुअ रअणकरण्डिआ छण्डिआ । ही ही ही । ढुण्ढौलीगामीणस्स फुङ्कटमिस्सस्स णिरक्खरं सच्छपोत्थिअं पवाहे पडिदम् । हडिवाडिगामीणस्स णिरक्खरसुअस्स जन्तुकेउणो महावेज्जस्स ओसहकरण्डिणा मूसएहिं खण्डिदा । टिक्कडउवाडगाममुहमण्डणेण कुलवाहिणा बटुएण बन्धनं कदुअ ण पत्थिआ धुत्तिआ । णिस्सतानग्गामसरोवरराअहंसेन संगामविसरेण राउत्तराएण बन्धअं कदुअ सुणअस्स पाणिअं दिण्णम् । ही ही ही । बगउलीगामीणस्स झगडगसारस्स ठक्कसाहुणो लेहसंपुडिआ पवाहपडिआ । चमरसेणविहारवासिणा तेण बन्दिएण वसणाअरेण णिद्दारिअं पडसाडिअम् । ता एहिं दुव्विदद्देहिं भण्डिदम्हि । भणिदं च केणा वि—

'दुट्ठभुअंगो जो णिअघरलज्जइ दुट्ठसिणेहो जो दाणविवज्जइ ।
स कुरूओ जो हिअए ण रुच्चइ पत्थरकठिणो जो निट्ठुरं वच्चइ ॥ १२ ॥' (क)

---

(क) एष स मत्तकलकण्ठकलकलाकुलितदशदिङ्मुखो वसन्तसमयसमारम्भो वर्तते । तत्किं न गृह्णाति बन्धकीकृतं भूतिभाजनं दरिहडाग्रामीणस्तपस्वी अज्ञानराशिः । अन्यच्च हग्गउलीग्रामीणेन जटासुरदिगम्बरेण नेच्छिता पिच्छिका । सुण्डिवालग्रामीणेन सभासालिना महोपाध्यायेनापि बन्धकं कृत्वा रत्नकरण्डिका त्यक्ता । ही ही ही । ढुण्ढौलीग्रामीणस्य फुङ्कटमिश्रस्य निरक्षरं शास्त्रपुस्तकं प्रवाहे पतितम् । हडिवाडिग्रामीणस्य निरक्षरसुतस्य जन्तुकेतोर्महावैद्यस्यौषधकरण्डिका मूषकैः खण्डिता । टिक्कडउवालग्राममुखमण्डनेन कुलव्याधिना बटुकेन बन्धनं कृत्वा न प्रार्थिता धोतिका । निःसंतानग्रामसरोवरराजहंसेन संग्रामविसरेण राउत्तराजेन बन्धकं कृत्वा शुनकस्य

---

१. 'दन्तशून्य' ग. २. 'परिवृत्य' क.

(नेपथ्ये ।)

वामागमाचारविदां वरिष्ठः परापकारव्यसनैकनिष्ठः ।
अयं स वेदार्थपथप्रतीपः सभासलिः कौलकुलप्रदीपः ॥ १३ ॥

(पुनर्नेपथ्ये सहासम्)

बटुः—अये, आश्चर्यमाश्चर्यम् । इदानीं कुट्टनीभवनमलंक्रियते महामहोपाध्यायेन दाम्भिकचक्रवर्तिना महाहवपालिना निन्दितवन्दमालिना तिमिराकुलनयनेनापि परदोषदर्शिना सभासलिना ।

(ततः प्रविशति कुलव्याधिबटुकेनानुगम्यमानः सभासलिः ।)

सभासलिः—भो भोः कुलव्याधे, क सा दन्तुरा कुट्टनी ।

कुलव्याधिः—एसा सा वसीकरणमन्तं जवन्ती भुजंगमग्गं मग्गअन्ती वट्टदि । (क)

सभासलिः—(तामवलोक्य स्वगतम् ।)

अन्तर्निमग्नं नयनद्वयेन कचित्प्रयातं नवयौवनेन ।
भग्नौ कपोलौ पतितं कुचाभ्यां मन्ये भयान्मन्मथसायकानाम् ॥ १४ ॥

किंच ।

भुजंगदंशव्यसनाकुलाया दन्ता बहिर्गा इव दन्तुरायाः ।
बन्धानुसंधानपरा यदीया पाशोपमा वल्गति कर्णपाली ॥ १५ ॥

---

पानीयं दत्तम् । ही ही ही । बगउलीग्रामीणस्य झगडगसारस्य ठक्कश्रेष्ठिनो लेखसंपुटिका प्रवाहपतिता । चमरसेनविहारवासिना तेन बन्दिना व्यसनाकरेण निर्दारितं पट्टशाटकम् । तदेतैर्दुर्विदग्धैर्मण्डितास्मि । भणितं च केनापि—

'दुष्टभुजंगो यो निजगृहे लज्जितो दुष्टस्नेहो यो दानविवर्जितः ।
स कुरूपो यो हृदये न रोचते प्रस्तरकठिनो यो निष्ठुरं वदति ॥'

(क) एषा सा वशीकरणमन्त्रं जपन्ती भुजंगमार्गं मार्गयमाणा वर्तते ।

---

१. 'बटुः सहासम्' ग. २. 'बटुः' ख-पुस्तके नास्ति. ३. 'अये' क-पुस्तके नास्ति. ४. 'अलंकृतं दाम्भिक' ग. ५. 'अनेन महाविटमेलिना' ग. ६. 'व्यसनातुराया' ख-ग. ७. 'बहिःस्था' ग. ८. अस्माच्छ्लोकादनन्तरं ग-पुस्तके 'अपि च । गलौ जरद्रल्लकसंनिकाशौ हारिद्ररन्धा(?) सदृशौ पयोधरौ । विशीर्णचुल्लीसदृशं भगोदरं तथापि रण्डास्ति रताभिलाषिणी ॥' इत्यधिकमस्ति.

(प्रकाशमुपसृत्य कर्णौ स्पृष्ट्वा सहासं वामपाणिना ।) अहमभिवादये ।

दन्तुरा—मअणमञ्जरी दे पसीदतु । एदं भद्दासणम् । उपविसदु उवज्झाओ । (क)

सभासलिः—(उपविश्य ।) अये, दूरत एवास्माभिराकर्णितः वसन्तगीतिः । तत्क सा मदनमञ्जरी ।

कुलव्याधिः—उवज्झाअ, जइ तुह चरिअं कलहप्पिआ जाणिस्सदि, ता तुम्हेहिं किं कादव्वम् । (ख)

दन्तुरा—(सहासम् ।) एदाणं कलहप्पिआ णाम पणइणी । (ग)

कुलव्याधिः—(सोल्लासम् ।) अह किम् । (घ)

दन्तुरा—मअणमञ्जरि, इदो इदो । (ङ)

मदनमञ्जरी—(उपसृत्य ।) अम्ब, को एसो । (च)

दन्तुरा—सो एसो सहासलि णाम उवज्झाओ जस्स कलहप्पिआ णाम घरिणी । (छ)

सभासलिः—(मदनमञ्जरीमवलोक्य ।) अये, रोषोऽपि लीलावतीनां चित्तमुन्मादयति । तथा हि ।

---

(क) मदनमञ्जरी ते प्रसीदतु । एतद्भद्रासनम् । उपविशतूपाध्यायः ।

(ख) उपाध्याय, यदि तव चरितं कलहप्रिया ज्ञास्यति, तदा युष्माभिः किं कर्तव्यम् ।

(ग) एतेषां कलहप्रिया नाम प्रणयिनी ।

(घ) अथ किम् ।

(ङ) मदनमञ्जरि, इत इतः ।

(च) अम्ब, क एषः ।

(छ) स एष सभासलिर्नामोपाध्यायो यस्य कलहप्रिया नाम गृहिणी ।

---

१. 'सहासं' ग-पुस्तके नास्ति. २. 'वामपाणिना' क-ख-पुस्तकयोर्नास्ति. ३. 'सोल्लासम्' क-ग-पुस्तकयोर्नास्ति. ४. 'पइणी (पत्नी)' ख. ५. अस्मात्प्राक् ख-पुस्तके "कुलव्याधिः—उवज्झाअ, पेक्ख, पेक्ख । 'जहणत्थणवीदपआसमओ तणुमण्डखडव्व पलाइगओ । णवपीणपओहरमण्डलिआ जणु बम्भणसंचलपुत्तलिआ ॥" इत्यधिकमस्ति.

आनन्दकारि मदनज्वरदर्पहारि
पीयूषपङ्कपरिहासरसानुकारि ।
प्रेमप्रसारि परमाभ्युदयानुकारि
वामभ्रुवामहह किं न मनोविकारि ॥ १६ ॥

**कुलव्याधिः**—[1]अये दन्तुरे, अज्ज ज्जेव्व कलहप्पिआए[2] समं एदाणं दसणादसणि णहाणहि करचरणणिब्बन्धभीसणो महाहवो संवुत्तो । तदो दव्वीखण्डेण, तदो अलादखण्डेण, तदो पीढिआए, तदो हण्डिआए एसो उवज्झाओ हणिअ णीसारिदो । (क)

**दन्तुरा**—(सस्मितम् ।) उवज्झाअ, ता कीस ईदिसीणं तुम्हेहिं संगमो विहिदो । (ख)

**सभासलिः**—[3]नष्टाग्निश्रोत्रियसुता मच्छरहट्टा ग्रामीणा मासोपवासिनी । किं तु [4]राक्षसीवातिप्रगल्भा [5]वृद्धा च । अतएवाहं पतितकुचस्पर्शभीतः प्रबलतरनिर्वेदादत्रायातः ।

**दन्तुरा**—जुत्तमिदं तुम्हाणं महापण्डिआणम् । (ग)

---

(क) अये दन्तुरे, अद्यैव कलहप्रियया सममेतेषां दशनादशनि नखानखि करचरणनिर्बन्धभीषणो महाहवः संवृत्तः । ततो दर्वीखण्डेण, ततोऽलातखण्डेन, ततः पीठिकया, ततो हण्डिकया, एष उपाध्यायो हत्वा निःसारितः ।

(ख) उपाध्याय, तत्किमीदृशीनां युष्माभिः संगमो विहितः ।

(ग) युक्तमिदं युष्माकं महापण्डितानाम् ।

---

१. 'अये दन्तुरे' इति क-ख-पुस्तकयोर्नास्ति. २. 'पढमं' ख. ३. 'नष्टा' सा श्रोत्रिय-' क-ग. ४. 'राक्षसीव तिष्ठति प्रगल्भा' ख. ५. 'धृष्टा' क; 'वृद्धा चास्पृश्या । यतः । अपि स्पर्शेन या कुर्यादुपलं पुलकान्वितम् । यौवनं वार्धके सैव राक्षसीव भयंकरी ॥ किंच । प्रायश्चित्तं न हरतः कामिन्या पतितौ स्तनौ । अत एव तयोः स्पर्शे लोकोऽयं विगतादरः ॥ अपि च । पतितानां संसर्गं त्यजन्ति दूरेण निर्मला गुणिनः । इति कथयञ्जरतीनां हारः परिहरति कुचयुगलम् ॥' ग.

**मदनमञ्जरी**—(सोद्वेगं संस्कृतमाश्रित्य।)

आयस्यति भवतोऽयं विनयपरस्ताद्दगनुरागः।
वन्ध्यासुतहृदयगता मालेयं गगनकुसुमानाम्॥ १७॥

**सभासलिः**—(मदनमञ्जरीमवलोक्य।)

हठाक्रान्तं नीलोत्पलदलविशालालसदृश-
स्त्रिभि-मध्यं बद्धं वलिभिरबलं वीक्ष्य विधिना।
प्रबन्धः कोऽप्यस्याः स्तनकलशयोश्चारुरचना
नितम्बप्राग्भारादलसगमनः क्लेशदमनः॥ १८॥

अपि च।

हर्षोत्फुल्लकपोलया स्तनभरव्यालोलया बालया
हेमाम्भोरुहवक्त्रया दरदलन्नेत्रोत्पलप्रान्तया।
दृष्टश्चेदनया कुपत्रविषमैः संधानबन्धाकुलैः
किं न स्यान्मदनोऽपि पुङ्खितशरैर्व्यावृत्त्य लक्ष्यीकृतः॥ १९॥

(दन्तुरामवलोक्य।) अये, कुतो जङ्घाव्रणव्याकुलिता भवती।

**दन्तुरा**—संगामविसरेण राउत्तराएण बन्धए सुणओ दिण्णो। तेण हं भँक्खिदम्हि। (क)

**सभासलिः**—कुलव्याधे, समाहूयतां जन्तुकेतुनामा महावैद्यः।

**कुलव्याधिः**—(जन्तुकेतुमाहूय।) इमाए गहिरणाहीवणाणं विसमो उवआरो। (ख)

**दन्तुरा**—उवज्झाअ, किं मं विडम्बेदि एसो। (ग)

**सभासलिः**—अयमविदितः किं भवत्या।

---

(क) संग्रामविसरेण राउत्तराजेण बन्धके शुनको दत्तः। तेनाहं भक्षितास्मि।
(ख) एतस्या गभीरनाभिव्रणानां विषम उपचारः।
(ग) उपाध्याय, किं मां विडम्बयत्येषः।

---

१. 'विनयमय' ख. २. 'हृदयस्थितमालेव' ख. ३. 'चाङ्गरचने' क; 'अङ्गचलने' ख. ४. 'प्राग्भारः कटकटमनः' क ग. ५. 'शमनः' ग. ६. 'भङ्गाकुलैः' ख-ग. ७. 'मोडिअम्हि' ख-ग. ८. समानीयताम्' क. ९. 'जन्तुकेतुमाहूय' इति क-ख-पुस्तकयोर्नास्ति. १०. 'अविदितोऽयं किं' क-ख.

अविलम्बकूपझम्पः कटुरटितांकुलितदिङ्मुखो मुखरः ।
कुत्सित[1]करणग्रामः कुधियामवधिः कुलव्याधिः ॥ २० ॥

**कुलव्याधिः**—भो उवज्झाअ, एआरिसो को वि विज्जो [2]वाहिबन्धओ । (क)

**सभासलिः**—[3]नाकर्णितानि भवता जन्तुकेतोरनिवारितप्रसराण्युपचारवचनानि । तथा हि ।

उत्काशे कण्ठदाहः प्रचुरघृतपयःपानमामज्वरार्ते
रक्ताकृष्टिः कृशानामुदरभयहरा कर्कटी सक्तुमिश्रा ।
पथ्या पथ्यातिसारे [4]दृशि सरुजि [5]पुनः क्षारचूर्णप्रयोग-
[6]स्तत्तन्मिथ्योपचारैस्तरुणयति यमाडम्बरं जन्तुकेतुः ॥ २१ ॥

**जन्तुकेतुः**—([7]प्रविश्य ।)

व्याधयो मदुपचारलालिता मत्प्रयुक्तममृतं विषं भवेत् ।
किं यमेन सरुजां किमौषधैर्जीवहर्तरि पुरःस्थिते [8]मयि ॥ २२ ॥

[9]**दन्तुरा**—महावेज्ज, मअणमञ्जरीए गले मीणकण्टअं लग्गिअं वट्टदि । [10]तत्थ किं करीअदु । (ख)

**जन्तुकेतुः**—([11]सगर्वम् ।) [12]दृष्टप्रत्ययस्तावदुपचारः । पूर्वमुष्यस्य गले

---

(क) भो उपाध्याय, एतादृशः कोऽपि वैद्यो व्याधिबन्धकः ।

(ख) महावैद्य, मदनमञ्जर्या गले मीनकण्टकं लग्नं वर्तते । तत्र किं क्रियते ।

---

१. 'करणः कृपणः' क. २. 'महावाहिबन्धणो' ख. ३. 'न श्रुतानि' ग. ४. 'दृशि॰रुजि हितकृत्' ख. ५. 'हितः' ग. ६. 'तैस्तैः' ख. ७. '(प्रविश्य स्वगतम् ।) वैद्योऽहं वैद्यराजोऽहं सर्वव्याधिसमन्वितः । यं यं स्पृशामि हस्तेन क्षणार्धं स न जीवति ॥ व्याधयो–' ग. ८. असादनन्तरं ख-पुस्तके 'श्रूयतामस्मद्गृहस्य निर्व्याधयः । श्लीपदे च न मे पीडा गलगण्डो न बाधते । गृहिणी ग्रहणीग्रस्ता ज्वरितं बालकद्वयम् ॥' इत्यधिकमस्ति. ९. 'दन्तुरा—जन्तुकेतुमवलोक्य प्रणम्य' ग. १०. 'ता' क; 'किं तत्थ करीअदु तत्थ ओसहं भण' ख. ११. 'सगर्वम्' क-ख-पुस्तकयोर्नास्ति. १२. 'दृष्टप्रत्ययस्तावदुपचारः' क-ग-पुस्तकयोर्नास्ति.

कर्कटी लग्नासीत् । तत्रास्मत्पित्रा [1]कुटुम्बकेतुना निरक्षरेणोष्ट्रस्य [2]मुखं बन्धयित्वा दृढतररज्जुभिराकृष्टम् । ततस्तन्मुखाद्विगलिता कर्कटी । तदेतस्या अपि [3]मुखं बन्धयित्वा किमिति नाकृष्यते ।

(ततस्तस्या हसन्त्या मुखाद्विगलितं मीनकण्टकम् ।)

(ततः [4]सगर्वम्)

**जन्तुकेतुः**—अवधार्यतामस्मदुपचारचातुर्यम् ।

**सभासलिः**—जन्तुकेतो, महाप्रयत्नेन क्रियता[5]मस्या उपचारः ।

**जन्तुकेतुः**—अस्मा[6]दनुष्ठिताया अस्या गुह्यागारेऽपि भविष्यति विशेषः ।

**सभासलिः**—निवेद्यतां तदुपचारः ।

**जन्तुकेतुः**—श्रूयतां चरकमतम् ।

यस्य कस्य तरोर्मूलं येन केनापि पेषयेत् ।
यस्मै कस्मै प्रदातव्यं यद्वा तद्वा भविष्यति ॥ २३ ॥

**सभासलिः**—[7]अद्येह हट्टे रोदनकलकलः संवृत्तः । [8]तत्तत्र किं भवदुपचारः संजातः ।

**जन्तुकेतुः**—नहि नहि । भवद्भिरेव यदि तत्र स्वस्त्ययनं कृतं स्यात् ।

**सभासलिः**—नहि नहि ।

**कुलव्याधिः**—अज्ज, जइ तुम्हे दुवे वि तत्थ ण गदा, ता किं वज्जेण मारिदो वणिअतणओ । (क)

---

(क) आर्य, यदि युवां द्वावपि तत्र न गतौ, तत्किं वज्रेण मारितो वणिक्तनयः ।

---

१. 'सकुटुम्बकेन निरक्षरेण' क; 'निरक्षरेण सकुटुम्बकेन' ख. २. 'मुष्कं' क-ख. ३. 'मुरकं' क-ख. ४. 'सगर्वमिव' ख-ग. ५. 'आसां' क. ६. 'अनुष्ठितानामासां' क. ७. 'अद्य हट्टमध्ये' ख. ८. 'तत्किं भवतामुपचारस्तत्र संजातः' ख; 'तत्र किं भवतोपचारः कृतः' ग.

**जन्तुकेतुः**—अहो दुर्दैवमस्माकम् । निर्व्याधयः सकलनगरप्राणिनः ।[1] (दीर्घं निःश्वस्य ।) अहो धिग्व्यवहारं बर्बरपुरस्य, यद्वैद्य एव मृतकखट्वामुद्वहति । अत एवास्माभिरुद्वहनभारभयाद्गजवैद्यकमपहाय बालतन्त्रमभ्यस्तम् । बालस्य हि मृतस्य सुकरमुद्वहनम् । किं च ।

श्मश्रुसंचयविध्वंसि जलज्ज्वलनभाजनम् ।
नोपसर्पति चेदग्रे मृतं मुञ्चति किं भिषक् ॥ २४ ॥[3]

**सभासलिः**—अहमप्यभिमतनियमः स्वस्त्ययनार्थं व्रजामि ।

**जन्तुकेतुः**—कीदृशस्ते नियमः ।

**सभासलिः**—यत्करटकश्राद्धेऽन्यस्य प्रवेशो न दीयते । अयमेवाभिमतो नियमः सर्वत्र ।

**दन्तुरा**—महावेज्ज, तिमिराउला मे णअणा ण पेक्खन्ति । ता ओसहं भण । (क)

**जन्तुकेतुः**—

चक्षूरोगे समुत्पन्ने तत्तत्कालं गुदे न्यसेत् ।
तदा नेत्रोद्भवां पीडां मनसापि न संस्मरेत् ॥ २५ ॥

अपि च ।

अर्कक्षीरं वटक्षीरं स्नुहीक्षीरं तथैव च ।
अञ्जनं तिलमात्रेण पर्वतोऽपि न दृश्यते ॥ २६ ॥

(दन्तुरां प्रति ।) कियद्दूरं पश्यसि ।

---

(क) महावैद्य, तिमिराकुले मे नयने न पश्यतः । तदौषधं भण ।

---

१. अस्मादनन्तरम् 'चितां प्रज्वलितां दृष्ट्वा वैद्यो विस्मयमागतः । नाहं गतो न मे भ्राता कस्येदं हस्तलाघवम् ॥' इत्यधिकमस्ति. २. 'चेदग्नेर्मृतं मुञ्चति को' क. ३. अस्मादनन्तरम् 'वैद्यः क्रूरो यमः क्रूरो वैद्यः क्रूरो यमादपि । यमो हरत्यसूनेव वैद्यस्तु सवसूनसून् ॥' इत्यधिकमस्ति. ४. 'संधिना' ख-ग. ५. 'अभिमतसंधिः' ख. ६. 'कटश्राद्धे' ख. ७. 'संधिः' क. ८. 'चक्षूरोगे' इत्यारभ्य 'दन्तुरां प्रति' इत्यन्तं क-ग-पुस्तकयोर्नास्ति.

**दन्तुरा**—वंडरुक्खं जाव । (क)

**जन्तुकेतुः**—अत्र. वटवृक्षोऽप्यस्ति किम् ।

**कुलव्याधिः**—वेज्जो ज्जेव तिमिराउलो । ता बुड्डिअं उवआरेण । (ख)

**जन्तुकेतुः**—(मदनमञ्जरीमवलोक्य ।)

स्तनकलशाभ्यामाभ्याममुना गुरुणा नितम्बबिम्बेन ।
कस्य न मन्मथदीक्षाविधिना विधिना हृतं चेतः ॥ २७ ॥

(परिवृत्य ।) वशीकरणमारणमोहनस्तम्भनोच्चाटनमौषधमनुसरामि । (इति निष्क्रान्तः ।)

(नेपथ्ये ।)

नष्टश्रुतिर्व्यक्तभुजङ्गसङ्गः संगीतकानन्दविनोदबन्धुः ।
विक्रीतलज्जः स्मरबाणवर्ती जटासुरस्तस्करचक्रवर्ती ॥ २८ ॥

(ततः प्रविशति जटासुरो नाम दिगम्बरः ।)

**दिगम्बरः**—अलिहन्त अलिहन्त, अण्णाणरासिणा तवस्सिणा अणवरज्झा मए छेलिआ णिहदा । ता हगे विचालट्ठाणमाअदो । (ग)

(नेपथ्ये ।)

किमङ्गरागाभिमुखः कपाली द्विजिह्वदोषाकरधूर्तमूर्तिः ।
विक्रीतलज्जो रमयन्भुजङ्गानज्ञानराशिः समुपागतोऽयम् ॥ २९ ॥

(प्रविश्य ।)

**अज्ञानराशिः**—मया सा पुष्पवाटिकायां चरन्ती छागी निहता । तदि तं विचारयतु सभासलिरुपाध्यायः ।

**सभासलिः**—(सविमर्शं विचार्य ।) यदा ज्ञानपूर्वं छागीवधः कृतस्तदा मूल्यं दातव्यम् । नो चेन्न किमपि ।

---

(क) वटवृक्षं यावत् ।

(ख) वैद्य एव तिमिराकुलः । तद्बुडितमुपचारेण ।

(ग) अर्हन्नर्हन्, अज्ञानराशिना तपस्विनानपराद्धा मम च्छागी निहता । तदहं विचारस्थानमागतः ।

---

१. 'अग्गे वडरुक्खं' क. २. 'अग्रे' क. ३. 'अन्धलओ' क. ४. 'नितम्बेन' क-ग. ५. 'भस्माङ्गरागा-' ख. ६. 'विचार्यतां सभासलिना' ख. ७. 'दातुमर्हति' ख.

**अज्ञानराशिः**—(सरभसम् ।) मया छागीति न निहता, किं तु वस्तिकेति ज्ञातम् ।

**सभासलिः**—तर्हि जितमज्ञानराशिना । तद्गृहाण जयपत्रम्[1] ।

तपस्विनामुना सत्यं जितमज्ञानराशिना ।
जटानां कुलटानां च यत्रैकत्र समागमः ॥ ३० ॥

**अज्ञानराशिः**—(सक्रोधम् ।) अये[2], मामुपहसत्युपाध्यायः । अहह, ब्राह्मण्यं विनापि परमप्रतिष्ठाप्रकर्षस्ते । रे[3] रे,

विशालतिलकारम्भ दम्भक्षोभकलानिधे ।
राजवेश्मसरःकङ्क रङ्क केनोपमीयसे ॥ ३१ ॥

**सभासलिः**—(सकोपम् ।)

कौपीनवानपि जटापटलाकुलोऽपि
भालस्थलस्खलितभस्मकणारुणाक्षः ।
उन्मादबन्धुरुपनीय गलेऽक्षमाला-
मुन्मार्ष्टि वारवनिता जघनं जघन्यः ॥ ३२ ॥

**दन्तुरा**[4]—तुम्हेहिं लज्जा कत्थ विक्किणिदा । (क)

**सभासलिः**—अद्यैव हट्टे महाजनपुरतः सुशीलादेव्या सुवर्णदाम्ना क्रीता ।

**अज्ञानराशिः**—(मदनमञ्जरीमवलोक्य ।)

नेत्रानन्दभुवः प्रमोदवसतेरस्याः कुरङ्गीदृश-
स्तन्वङ्ग्याः स्तनशैलमूलविलसन्मुक्तालतापाशितः ।
विस्तीर्णे जघनस्थलीपरिसरे व्यामोहलीलाभर-
भ्रान्त स्वान्तकुरङ्ग यास्यसि कुतः पञ्चेषुबाणार्दितः[5] ॥ ३३ ॥

---

(क) युष्माभिर्लज्जा कुत्र विक्रीता ।

---

१. 'जयपत्रमिति पत्रमर्पयति' ख. २. 'अये' इत्यारभ्य 'प्रकर्षस्ते' इत्यन्तं ख-ग-पुस्तकयोर्नास्ति. ३. 'अरे रे' ख. ४. 'दन्तुरा' इत्यारभ्य 'क्रीता' इत्यन्तं क-पुस्तके नास्ति. ५. 'पञ्चेषुणाभ्यर्दितः' ख.

(परिवृत्य।)[1]

दुर्दैवादवधीरिता रतिपतेरानन्दकन्दस्थली
प्राप्ता कल्पलता कथं कथमपि स्थानान्तरे विस्मृता।
विज्ञाता न मया जडेन पुलकैरावेदिता विह्वला
बालापाङ्गतरङ्गभङ्गिमकलालीलानिधिः प्रेयसी ॥ ३४ ॥

(प्रविश्य।)

**मिथ्याराशिः**—भो[4] भो, सअलतवस्सिणीमुहमण्डणाए तुम्हाणं तवस्सिणीए पसववेअणा वट्टदि। ता आगच्छध। (क)

**अज्ञानराशिः**—(अतिरभसाद्भस्म विकिरन्।) तत्प्रसवकुशला काचिद्न्विष्यताम्।

**सभासलिः**—वयमेव प्रसवकर्मणि निपुणाः।

(ततः प्रविशति पुत्रहस्ता तपस्विनी।)

**सभासलिः**—(परिवृत्यावलोक्य च।) अहो भस्माङ्कुरस्य रमणीयता। किं च।

आदन्तजननात्सद्य आ चूडान्नैशिकी क्रिया।
त्रिरात्रमा व्रतादेशाद्दशरात्रमतः परम् ॥ ३५ ॥

(परिवृत्य।)

**दिगम्बरः**—दन्तुले, हगे कामाउले मअणमञ्जरीणिमित्तं आगदे। ता गेण्हदु भोदी अप्पमुल्लेण सुवण्णघडिदं अलिहन्तम्। (ख)

---

(क) भो भोः, सकलतपस्विनीमुखमण्डनाया युष्माकं तपस्विन्या प्रसववेदना वर्तते। तदागच्छत।

(ख) दन्तुरे, अहं कामाकुलो मदनमञ्जरीनिमित्तमागतः। तद्गृह्णातु भवती अल्पमूल्येन सुवर्णघटितमर्हन्तम्।

---

१. 'परिवृत्य जटासुरः' क; 'परिवृत्यावलोक्य च' ग. २. 'नेत्रापाङ्ग' क. ३. 'संगम' ख. ४. 'भो भोः' ख-ग-पुस्तकयोर्नास्ति. ५. 'तवस्सिवंस' ख. ६. 'काप्यन्वेष्यताम्' क; 'काचिदाहूयानीयताम्' ग. ७. 'कर्मकुशलाः' क-ग. ८. अस्मादनन्तरम् 'परिवृत्य मिथ्याराशिः—हा तपस्विनीपुत्र' इत्यधिकमस्ति. ९. 'कामाउले' इति ग-पुस्तके नास्ति. १०. 'परममुल्लेण' ख-ग.

दन्तुरा[1]—(तपस्विनं प्रति ।) भो, भुअङ्गराअ, तुम्हेहिं जडासुरो वसीकरणमन्तं सिक्खविदो । (क)

अज्ञानराशिः—मयैव[2] वात्सल्यादुच्चाटनमोहनमारणरण्डावशीकरणमन्त्रा अस्मै प्रदत्ताः ।

जटासुरः—तेहिं जेव्व मन्तेहिं हगे धम्मचलणसीलाए कुट्टणीरक्खसीए मुहकन्दरे पडिदो । (ख)

दन्तुरा—विमणा मअणमञ्जरी । ता जो एत्थ कुरूवो मलपङ्कमिस्सिदो सो णीसारीअदु । (ग)

जटासुरः[3]—(सरभसं[4] लगुडमादाय ।) मए जेव्व णीसारिदव्वा सव्वे ।(घ)

सभासलिः—तदयं[5] मुष्टिलगुडन्यायः । (पुरोऽवलोक्य[6] ।) अहो पाण्डित्यम् ।

पुनस्त्रिदण्डः पुनरेकदण्डः पुनःपुनर्वञ्चकतामुपेतः[7] ।
तपस्वितामेत्य जटासुरोऽयं नग्नोऽभवद्वञ्चकचक्रवर्ती[8] ॥ ३६ ॥

(पुनरवलोक्य ।) युक्तमुक्तं केनापि ।

---

(क) भो भुजंगराज, युष्माभिर्जटासुरो वशीकरणमन्त्रं शिक्षितः ।

(ख) तैरेव मन्त्रैरहं धर्मचरणशीलायाः कुट्टनीराक्षस्या मुखकन्दरे पतितः ।

(ग) विमना मदनमञ्जरी । तद्योऽत्र कुरूपो मलपङ्कमिश्रितः स निःसार्यताम् ।

(घ) मयैव निःसारयितव्याः सर्वे ।

---

१. अस्मात्प्राक् 'भो दिअम्बर, केत्थ तुम्हेहिं लज्जा विक्कविदा । ('भो दिगम्बर, कुत्र युष्माभिर्लज्जा विक्रीता' इति च्छाया ।) दिगम्बरः (सावलेपम्)—हट्टाए महाजणपुरदो सुसीलाए साहुवहुआए कीणिदा । एतेण धणेण कुलवाहिणो बडुअस्स तुरगओ टङ्कसदेहिं कीणिदो । सआसासोहवकलिगाणो मए कीणिदो । (हट्टे महाजनपुरतः सुशीलया साधुवध्वा क्रीता । एतेन धनेन कुलव्याधेर्बटुकस्य तुरगकष्टङ्कशतैः क्रीतः ।................................ । मया क्रीतः' इति च्छाया)' इति क-पुस्तकेऽधिकमस्ति. २. 'मया शिष्यवात्सल्यात्' ख. ३. 'दिगम्बरः' ख-ग. ४. 'सश्वासम्' ख. ५. 'कोऽयं' क. ६. 'पुनरवलोक्य' ख-ग. ७. 'वन्धकतां' क. ८. 'भग्नो' ख.

उभावप्यश्रुतग्रन्थावुभावपि जडात्मकौ ।
अहो मोहस्य माहात्म्यं यदेकः शिष्यतां गतः ॥ ३७ ॥

(प्राचीमवलोक्य ।) अये, शशाङ्ककरनिकरनिवारिततिमि[1]रमनोहरा दिशः । तथा हि ।

एष स्वर्गतरङ्गिणीजलमिलद्दिग्दन्तिदन्तद्युती
राज[2]द्राजतकुम्भविभ्रमध[3]रः शीतांशुरभ्युद्गतः ।
हंसीयत्यमलाम्बुजीयति लसड्डिण्डीरपिण्डीयति
स्फारस्फाटिककुण्डलीयति दि[4]शामानन्दकन्दीयति ॥ ३८ ॥

(इति निष्क्रान्ताः[5] सर्वे ।)

लज्जावि[6]क्रयो नाम प्रथमोऽङ्कः ।

---

द्वितीयोऽङ्कः ।

(त[7]तः प्रविशति विश्वासघातकनाम्ना मित्रेणानुगम्यमानो निःसंतानग्रामीणः सङ्ग्रामविसरो नाम [8]राउत्तराजः ।)

(सङ्ग्रा[9]मविसरः सहर्षं कु[10]ट्टनीं वामपाणिना प्रणम्योपविशति ।)

**दन्तुरा**—पुत्तअ, चिरं जीव । (क)

**सङ्ग्रामविसरः**—(मदनमञ्जरीमवलोक्य ।)

एतानि तानि हरनेत्रशिखि[11]प्रबन्ध-
दग्धस्मरव्रणविनाशरसायनानि ।
केषां न विस्मयकराणि नितम्बिनीनां
विश्वप्रियाणि नयनार्धविलोकितानि ॥ १ ॥

[12]अहो आश्चर्यम् ।

[13]मुखरं नूपुरयुगलं [14]प्रथयत्यभिसारमायताक्षीणाम् ।
इति निर्मुखयोः स्तनयोर्मध्यं न त्यजति पञ्चशरः ॥ २ ॥

---

(क) पुत्रक, चिरं जीव ।

---

१. 'तमोमनोहरा' ख; 'तिमिरविमला मनोहराः' ग. २. 'भ्राजत्' ख; 'भ्रश्यत्' ग. ३. 'हरः' क. ४. 'दिशां' ख-ग. ५. 'निष्क्रान्तौ' ख. ६. 'जयो' ख. ७. क-पुस्तके अस्मात्प्राक् 'नेपथ्ये अतःपरं दन्तुरापरिणयनं भविष्यति' इत्यधिकमस्ति. ८. 'राजपुत्रः' ख. ९. 'राउत्तरायः' क-ग. १०. 'दन्तुरां' क. ११. 'प्रपञ्च' ग. १२. 'अहो आश्चर्यम्' इति क-पुस्तके नास्ति. १३. 'प्रखरं' ख; 'रुचिरं' क. १४. 'कथयति' क.

किं[1] च ।

नूनमुन्मादयन्त्येता नपुंसकमपि स्त्रियः ।
यदश्रान्तकुचोपान्तयातायातपरं मनः ॥ ३ ॥

(प्रविश्य ।)

**विश्वासघातकः**—(सहर्षम् ।)

उवहसइ पम्हलच्छी लच्छीए गहिरजलहिजलवासम् ।
आलिङ्गणपरिचुम्बणरहिअं गोरीएँ सोहग्गम् ॥ ४ ॥ (क)

**सङ्ग्रामविसरः**—(दन्तुरां प्रति ।) मातः, भुजद्वयोपार्जितं यदस्मदीयं तद्यु[2]ष्मदीयमेव । किं तु ममाद्य नरपतिपुरतो राजवाहनतुरगप्रार्थनारसिकस्य मदनमञ्जरीदत्तहृ[3]दयस्य सङ्ग्रामावसरे विसरः[4] संवृत्तः[5] ।

**दन्तुरा**—जइ सो राआ राअवाहणं पअच्छदि, ता राउत्तराअसङ्गामविसरेण किं कादव्वम् । (ख)

**सङ्ग्रामविसरः**—सङ्ग्रामे तदेवारुह्य पलायनं विधेयम् ।

**दन्तुरा**—राउत्तराअ, जुत्तमिदं तुम्हाणम् । (ग)

**मदनमञ्जरी**—(सहर्षम् ।) एदेहिं जेव्व चरिदेहिं सअलजुवइवल्लहा तुम्हे । (घ)

**सङ्ग्रामविसरः**—(तामालिङ्ग्य ।)

कोऽयं व्याजविधिः पुनः पुनरसौ वक्रा कटाक्षच्छटा
कम्पस्वेदपरिश्रमैरनुपमैरेभिः[6] किमुच्छृङ्खलैः[7] ।

---

(क) उपहसति पक्ष्मलाक्षी लक्ष्म्या गभीरजलधिजलवासम् ।
आलिङ्गनपरिचुम्बनरहितं गौर्याः सौभाग्यम् ॥

(ख) यदि स राजा राजवाहनं प्रयच्छति, तदा राउत्तराजसङ्ग्रामविसरेण किं कर्तव्यम् ।

(ग) राउत्तराज, युक्तमिदं युष्माकम् ।

(घ) एतैरेव चरितैः सकलयुवतिवल्लभा यूयम् ।

---

१. 'किं च' इति ग-पुस्तके नास्ति. २. 'भवदीयं' क; 'युष्माकं' ख. ३. 'चित्तस्य' ग. ४. 'विरसः' क. ५. 'कृतः' ग. ६. 'कामस्वेदपरिश्रमैः' क; 'कम्पखेदपरिक्रमैः' ख. ७. 'एभिर्विमूर्छद्वलैः' ख.

प्रस्तावान्तरजल्पितानि सरला दृष्टिः स्मितं संवृतं
तन्वङ्ग्याश्चियुगीणसारममृतं मोक्षः पलालोपमः ॥ ९ ॥

(दन्तुरां प्रति ।) तत्कुत्र बन्धकीकृतः सारमेयो मे ।

**दन्तुरा**—स लोहसंकलं भञ्जिअ मं कम्मोडिअ ण जाणीअदि कहिं गदो । (क)

**सङ्ग्रामविसरः**—स मया विश्वासघातकपुरत एव टङ्कशतेन क्रीतः सर्वाखेटकचतुरः पितृवदस्मान्पुष्णाति । अतिदुर्ललिततया जनन्याः क्रोडे स्वपिति । बालकैः सह क्रीडति । चुम्बति मुखाम्बुजानि । तन्मित्र विश्वासघातक, प्रबोधयैनाम् ।

**विश्वासघातकः**—(कुट्टनीकर्णमुपेत्य ।) इमिणा विक्किणिदेण पञ्च वराडिआ वि ण लहदि । अण्णं अ, मअणमञ्जरिं गेण्हिअ पलाइदुमिच्छेदि । जइ अण्णधा तदा दे पाअजुअलं छिवामि । अह अप्पणो पिअरं बन्धामि । (पुनः कर्णमुपेत्य ।) एदस्स सुवण्णकलसो वट्टदि । तं दाव गेण्ह । तुए मए अद्धं अद्धं वण्टिअ गहीअदु । एसो उण णीसारीअदु दुज्जणो । (ख)

**दन्तुरा**—जइ ण एआरिसा तुम्हे ता कहं मअणमञ्जरी रत्तिदिवं तुम्ह गुणगणं सुमरदि । (ग)

**सङ्ग्रामविसरः**—भो भो मित्र विश्वासघातक, निवेदय मम निःसंतानग्रामीणपट्टकम् ।

---

(क) स लोहशृङ्खलां भङ्क्त्वा मां.....................न ज्ञायते कुत्र गतः ।

(ख) अनेन विक्रीतेन पञ्च वराटिका अपि न लभ्यन्ते । अन्यच्च, मदनमञ्जरीं गृहीत्वा पलायितुमिच्छति । यद्यन्यथा तदा ते पादयुगलं स्पृशामि । अथात्मनः पितरं बध्नामि । एतस्य सुवर्णकलशो वर्तते । तं तावद्गृहाण । त्वया मयार्धमर्धं विभज्य गृह्यताम् । एष पुनर्निःसार्यतां दुर्जनः ।

(ग) यदि नैतादृशा यूयं तत्कथं मदनमञ्जरी रात्रिंदिनं युष्मद्गुणगणं स्मरति ।

---

१. 'मातः कुत्र' ग. २. 'समक्षं टङ्क' ख. ३. 'जइ—बन्धामि' इति क-ग-पुस्तकयोर्नास्ति. ४. 'ग्रामीणं व्यापारपट्टकम्' ख; 'ग्रामीणव्यापारकपर्दकान्' क.

**विश्वासघातकः**—तस्स गामस्स वराडिआ जूअसंबन्धेण मए जेव्व गहिदा । अण्णं उण आदाउ णिवेदीअदु । (क) (इति पत्रं समर्पयति ।)

**सङ्ग्रामविसरः**—(मुखं प्रसार्य पठति ।)

वातालीमृतचटकैः सूकरविड्भिश्च मृतकवस्त्रैश्च ।
पवनानीतदलैरपि विक्रीतैः किं न धनलाभः ॥ ६ ॥

(वृद्धां जननीमुपनीय कुट्टनीं प्रति ।) अस्मदाखेटकौतुकं शुना विना न भवति । तदस्यैव कतिपयदिनानि यावदस्तु बन्धके । अनया च प्रतिदिनमवहितया सकलं दासीकर्म कर्तव्यम् । (मदनमञ्जरीमवलोक्य सानन्दम् ।)

प्रस्खलतु नीविबन्धः स्विद्यतु जघनं प्रवेपतामङ्गम् ।
तदपि भुजंगमनोज्ञा स्मरसंपल्लम्पटा कुलटा ॥ ७ ॥

(सोद्वेगम् ।) विज्ञातास्तावद्विश्वासघातकाधिष्ठिता निजग्रामादयः । तत्प्रार्थ्यतामृणार्थं साधुझंकटकसारः ।

(प्रविश्य ।)

**झंकटकसारः**—सङ्गामविसर, किणिदसुणअस्स जइ कवडिआ ण होन्ति ता मादरं विक्किणिअ कुक्कुरकवडिअं पअच्छ । (ख)

**सङ्ग्रामविसरः**—ऋणार्तस्य मम तावत्पञ्चदशपणान्युपनयतु भवान् ।

**झंकटकसारः**—सङ्गामविसर, अम्हमज्जादाए गेण्ह कवडिअम् । (ग)

**सङ्ग्रामविसरः**—(सविषादम् ।) कीदृशी ते व्यवहारमर्यादा ।

---

(ग) तस्य ग्रामस्य वराटिका द्यूतसंबन्धेन मयैव गृहीता । अन्यत्पुनरादाय निवेदयतु ।

(ख) सङ्ग्रामविसर, क्रीतशुनकस्य यदि कपर्दका न भवन्ति तदा मातरं विक्रीय कुक्कुरकपर्दकान्प्रयच्छ ।

(ग) सङ्ग्रामविसर, अस्मन्मर्यादया गृहाण कपर्दकान् ।

---

१. 'मुखं' ग-पुस्तके, 'मुखं प्रसार्य' ख-पुस्तके च नास्ति. २. 'नु' क. ३. 'अस्माकं' क. ४. 'बन्धके तावदस्तु' ग. ५. 'अन्तः' क. ६. 'मित्रविश्वासघातकाधिगता' क. ७. 'संगामविसर किणिदसुणअस्स' इति क-पुस्तके नास्ति. ८. 'पञ्चाशत्' क-ग. ९. 'सोद्वेगम्' क. १०. 'कीदृशी—आश्रित्य' इति क-ग-पुस्तकयोर्नास्ति.

झकटकसारः—(संस्कृतमाश्रित्य ।) [1]

द्विगुणग्रहणेच्छायां ताम्बूलं नैष्ठिकीं कलाम्।
भजन्ते ग्राहकाः पूर्वं राजपुत्र गतागतैः ॥ ८ ॥

दन्तुरा—(सोद्वेगम् ।) [2] इमिणा लडअमेलएण उवहसिदा मअणमञ्जरी। सव्वे वि वअणसारा भणिदं वि ण पअच्छन्ति। (क)

(नेपथ्ये ।)

परधननिविष्टदृष्टिर्मिथ्याशुक्लस्तमोमयो जगति।
सितदशनकिरणधोरणिधौतदिगन्तः परिस्फुरति ॥ ९ ॥

अपि च।

ब्राह्मण्यदर्पपरिपृष्टविरञ्चिलीलः [3]
शंभोरपि व्रतविधावुपहासशीलः।
कूपाम्बुधौतकपिलाम्बरवेषवर्ती
दम्भप्रियः स्फुरति वञ्चकचक्रवर्ती ॥ १० ॥

(ततः प्रविशति मिथ्याशुक्लः ।)

मिथ्याशुक्लः—(परिवृत्यावलोक्य च ।) आर्ये, [4] न भेतव्यं न भेतव्यम्। स्वाधीनैव लटकमेलकमण्डली। तथाहि।

अज्ञानराशिर्व्यसनाकरोऽयमयं कुलव्याधिरुपाधिशून्यः। [5]
जटासुरोऽयं भुवि जन्तुकेतुर्विश्वासघाती नहि कश्चिदन्यः ॥ ११ ॥

(सकोपम् ।)

परापकारशून्यो यः क्षणार्धमपि तिष्ठति।
स लोहकारभस्त्रेव श्वसन्नपि न जीवति [6] ॥ १२ ॥

---

(क) अनेन लटकमेलकेनोपहसिता मदनमञ्जरी। सर्वेऽपि वचनसारा भणितमपि न प्रयच्छन्ति।

---

१. 'भजन्ते स्वादमात्रेण पुराणं षोडशापणाः' क; 'भक्षिता मोदकाः पूर्वं भट्टपुत्र-गतागतैः' ग. २. 'सविषादम्' क. ३. 'परिशिष्ट' क-ख. ४. 'अये' क. ५. 'पूर्णः' ख. ६. 'जीवति' ग.

(मदन[1]मञ्जरीमवलोक्य स्वगतम् ।)

उल्लङ्घ्य व्यासवाक्यामृतरससरसीं विश्वभव्यामभव्यां
ज्ञात्वा हेयानहेयान्सहजरिपुगणान्वीक्ष्य सभ्यानसभ्यान् ।
सेवामुन्मुच्य शंभोर्जगदभयकलाशासनव्यग्रपाणे[2]-
र्मोहाल्लीलावतीनां व्यसन[3]भुवि नरीनर्ति चेतःपरेतः ॥ १३ ॥

(नेपथ्ये ।)

गुरो[4]र्गिरः पञ्चदिनान्युपास्य वेदान्तशास्त्राणि दिनत्रयं च ।
अमी समाघ्रातवितर्कवादाः समागताः फुङ्कट[5]मिश्रपादाः ॥ १४ ॥

(ततः प्रविशति फुङ्कटमिश्रः ।)

**फुङ्कटमिश्रः**—अये, प्रासादशिखरप्राङ्गणमारूढा मदनमञ्जरी । तथाहि ।[6]

उद्ग्रीवयन्धरणिमण्डल[7]मप्रयत्ना-
दावर्जयन्नमरवृन्दमुखाम्बुजानि ।
अस्या विनोदयति कस्य न चित्तवृत्तिं
प्रासादशैलशिखरप्रणयी मुखेन्दुः ॥ १५ ॥

**मिथ्याशुक्रः**—भो भोः फुङ्कटमिश्राः, युष्मानभिवादये ।

**फुङ्कटमिश्रः**—(उच्चैः ।) दीर्घायुर्भूयाः ।[8] (उपसृत्य ।) कुशलं भवतां शुण्डवाल[9]ग्रामनिवासिनाम् ।

**मिथ्याशुक्रः**—युष्मत्प्रसादात् ।

**फुङ्कटमिश्रः**—किं व्याख्यायते भवता ।

---

१. 'सकामं मदन' ख. २. 'व्यस्तपाणेः' क-ग. ३. 'व्यसनरुचि' ख. ४. साहित्यदर्पणे हास्यरसोदाहरणत्वेनोद्धृतोऽयं श्लोकः. ५. 'कुक्कुटमिश्रपादाः' इति साहित्यदर्पणधृतः पाठः; 'फोकटमिश्रपादाः' ख-ग. ६. अस्मादनन्तरं ग-पुस्तके 'अपि च, अयं दुराचारपरो गुरुर्मे खट्वाङ्गमाच्छाद्य पटाञ्चलेन । बिभ्रद्बृहत्पुस्तकसंनिकाशं जपन्पवर्गं (?) भृशलम्बकूर्चः ॥' इत्यधिकमस्ति. ७. 'मङ्गलमप्रमत्तं' क. ८. अस्मादनन्तरं ग-पुस्तके 'अन्यच्च, कन्दे स्थूलस्तदनु सरलः स्फारभूतोऽग्रदेशे वारंवारं निपतति पुनर्वारवारं प्रचण्डः । ईषद्वक्रः करिकरसमो मानिनीमानहन्ता युष्मद्वक्त्रे प्रविशतु सदा स्वस्तिमान्मारदण्डः ॥ किं च, यभस्व नित्यं यदि शक्तिरस्ति ते दिने दिने गच्छति वत्स यौवनम् । मृताय को दास्यति पिण्डसंनिधौ तिलोदकैः सार्धमलोमकं भगम् ॥' इत्यधिकमस्ति. ९. 'डोमवाड' ख; 'मुण्डिला' ग.

**मिथ्याशुक्लः**—'चोदनालक्षणोऽर्थो धर्मः' इत्यत्र सूत्रे धर्मनि[1]र्णयं विधाय 'अष्टाकपालं हविर्निर्वपेत्स्वर्गकामः' इत्येवमादिभिर्युक्तिभिः साधनाधिकरणं व्याख्यायतेऽस्माभिः।

**फुङ्कटमिश्रः**—(सहर्षम्।) व[2]त्स मिथ्याशुक्ल, महामहोपाध्यायोऽसि। (सविमर्शम्।) अहह। ब्राह्मण्यं विनापि प[3]रमः प्रतिष्ठाप्रकर्षः। तथा हि रा[4]ढीया वचनरचना—

एष व्याकरणं न वेत्ति न कृतः काव्येष्वनेन श्रमः
श्रुत्वाचामति भट्टवार्तिकगिरैः[5] स्नाति स्पृशंस्तद्विदः।
चण्डालानिव तर्कशासनपटून्नैयायिकान्मन्यते
राढीयैरि[6]तिहर्षगद्गदगलैः प्राभाकरः श्रूयते ॥ १६ ॥

**मिथ्याशुक्लः**—(सकोपम्।) अद्यास्मद्यज्ञागारवार्ता नाकर्णिता भवद्भिः। तथाहि।

संसिक्ते कुशवारिणा मखपतौ ब्रह्मण्युपान्तस्थिते
यज्ञागारगताः कथं कथमपि स्पृष्टाः कि[7]मिन्द्रादयः।
कोणस्थोऽपि पु[8]रस्कृतोऽपि यजुषा गौरीभुजंगो मया
हव्याशाविकलः कपालिकधिया नि[9]ष्कासितो धूर्जटिः ॥ १७ ॥

किं[10] च, वि[11]षमैव भवतां वाचोयुक्तिर्ढुण्ढोलीग्रामनिवासिनाम्। पृच्छामि तावत्। एकदण्डमतमभ्यस्तं भवद्भिः। तत्कथं मि[12]श्रता भवताम्।

**फुङ्कटमिश्रः**—व्याख्यायतेऽस्माभिः कर्ममीमांसा ब्रह्ममीमांसा च। अतो दर्शनद्वयज्ञानाद्वयं मिश्राः।

**मिथ्याशुक्लः**—अये, परस्पराविरोधादेकमेव द[13]र्शनम्। त[14]त्कुतो मि-

---

१. 'निर्णयविधौ' ख. २. 'स च महाप्रभाकरोऽस्ति' क; 'वत्स महाभाग्योऽसि' ग. ३. 'परमनैष्ठिकप्रकर्षः' क. ४. 'राढीया वचनरचना' क-पुस्तके नास्ति. ५. 'गिरं' क. ६. 'इति' ख. ७. 'महेन्द्रादयः' ख. ८. 'परिष्कृतो' क. ९. 'निर्धीरितो' ख. १०. 'फोकटमिश्रः' ग. ११. 'एषैव भवतां वचोयुक्तिष्टुण्टुपाल' क-ग. १२. 'भवतां मिश्रतायाता' ख; 'मिश्रता समायाता भवताम्' ग. १३. 'दर्शनं कुर्वः' क; 'दर्शनं लभ्यते' ख. १४. 'तत्कुतो मिश्रताभिमानः' ख; 'अतो मिथ्या मिश्राभिधानम्' ग.

आभिधानम् । [1]किं च, [2]वेदान्तवादिनां भवतामप्रामाणिकमद्वैतं प्रामाणिकं वा । [3]प्रमाणमस्ति चेद्द्वैतापत्तिः । अथ [4]प्रमाणं नास्ति [5]चेत्कथमद्वैतोपलब्धिः ।

**फुङ्कटमिश्रः**—अस्त्येव प्रमाणं किं [6]त्वभिन्नम् ।

**मिथ्याशुक्रः**—तदेव प्रमाणं तदेव प्रमेयमिति [7]गम्भीरा वेदान्तचर्चा ।

**फुङ्कटमिश्रः**—[8]अलमतिशुष्कचर्वणेन । मदनमञ्जरीस्वस्त्ययनार्थं वयमागताः ।

**मिथ्याशुक्रः**—(मदनमञ्जरीमवलोक्य ।)

किं नेत्रयो[9]रमृतवर्ति[10]रियं विधातु-
राद्या किमद्भुतशरीरविधानलेखा ।
संसारसारमहह त्रिजगत्पवित्रं
तद्रत्नमेतदुपसर्पति पङ्कजाक्षी ॥ १८ ॥

अपि च ।

एतस्याः स्तनभारभङ्गुरमुरः [10]पीना नितम्बस्थली
मध्यं मज्जति नाभिगर्तपतितं [11]नान्यं परं मुञ्चति । (?)
धैर्यं धेहि मनःकुरङ्ग पुरतो रोमावलीवागुरा
[12]तत्किं भावि गतागतव्यसनिनः किं वा विधेयं विधेः ॥१९॥

(सहर्षम् ।) पुनरवलोक्यतामियम् ।

**फुङ्कटमिश्रः**—(तामवलोक्य ।)

लावण्यामृतसरसी [13]ललितगतिर्विकचकमलदलनयना ।
कस्य न मदनशरासनवि[14]धुरमनस्तापमपहरति ॥ २० ॥

---

१. 'किं च' ख-पुस्तके नास्ति. २. 'वेदिनां' ख. ३. 'प्रामाणिकं' ग. ४. 'प्रामाणिकं' ग. ५. 'कुतो वै अद्वैतसिद्धिरिति' ख. ६. 'तु न भिन्नम्' क. ७. 'गम्भीरता वेदान्तवादिनाम्' ख. ८. 'वयस्यालमतिचर्वितचर्वणेन' क; 'अलं शुष्कतर्कवादेन वयं मदनमञ्जरीवार्ताकर्णनाय समागताः' ग. ९. 'अमृतसिन्धुः' क-ग. १० 'कान्ता' क; 'कीर्णा' ग. ११. 'नाल्पं चलं चुम्बति' ख; 'नाभ्यं वलं चुम्बति' ग. १२. 'तत्किं भ्रान्तिगतागत' ख; 'मेयं भाति गतागत' ग. १३. 'विमलतनुः' क. १४. 'विकल' ख; 'विह्वलहृत्तापमपनयति' ग.

अपि च।

तैस्तैर्[1]बन्धप्रबन्धैः कति कति न कृता जागरा नागरीभि-
नीतः कामः प्रतिष्ठां [2]रतिरभसरसप्रार्थनाभिर्नवाभिः।
तन्वीयं किं तु नीलोत्पल[3]दलयुगलप्रोज्ज्वलस्निग्धदृष्टि-
निर्व्याजैरङ्गहारैरुपचरति चमत्कारमन्तर्गभीरम् ॥ २१ ॥

**मिथ्याशुक्लः**—अरेरे [4]नरपशो, विषमाः शृङ्गारकथाः। अतिसंनिहितमदनचे[5]ष्टानुवादिन उक्तिरेव ते ग्राम्या। त[6]त्तद्विशेषरहितैश्च [7]वचनैर्न किंचिदुक्तं [8]भवति। तथाहि।

यज्जल्पितं किमपि [9]यच्च विलोकितं य-
[10]दाज्ञाप्रदानमसकृद्भुजवल्लिबन्धः।
प्रत्यङ्गचुम्बनकलाकलहानुवृत्ति-
रेतत्सुखं [11]तदधिका मदनस्य सृष्टिः ॥ २२ ॥

(इत्यन्योन्यं [12]कलहं कुरुतः। ततो मिथ्याशुक्लेन गलहस्तं दत्त्वा निः[13]सारितः फुङ्कटमिश्रः।)

(ततः प्रविशति [14]चमरसेनविहारवासी व्यसनाकरो [15]बन्दी।)

**व्यसनाकरः**—(पुरोऽवलोक्य।) [16]हा धिक्, कष्टम्। पृथुजघनया [17]रजक्या विना [18]रजन्यां समुत्खातनिधानस्थानमिव वि[19]भाति भवनम्। तथाहि।

अनङ्गमङ्गलारम्भकुम्भाविव पयोधरौ।
कस्य नार्तिहरौ तस्याः करपल्लवसं[20]गतौ ॥ २३ ॥

अपि च।

सप्रेमप्रसराः [21]प्रमोदमधुराः पीयूषवर्षोत्कराः
सान्द्रानन्दकराः सरज्वरहरास्तास्ताः कलाः सुभ्रुवः।

---

१. 'एभिः प्रबन्धैः' ख. २. 'रसरभस' ख. ३. 'दलनयना' क. ४. 'मनुष्यपशो' क. ५. 'चेष्टानुवादेन' क; 'चेष्टानुवादिनी' ख. ६. 'तद्विशेष' ख-ग. ७. 'वचनैः' क-पुस्तके नास्ति. ८. 'भवति' क-पुस्तके नास्ति. ९. 'वक्रविलोकितं' ख-ग. १०. 'प्रीतिप्रदानं' ख. ११. 'तदलिका मदनप्रवृत्तिः' क. १२. 'कलहायमानौ नृत्यतः' ख. १३. 'निःसारिताः फुङ्कटमिश्राः' ग. १४. 'चमरसेनग्राम' क; 'चमरिग्राम' ग. १५. 'बटुः' क; 'कुविन्दः' ख. १६. 'अहो धिक्' क; 'हा धिक् हा धिक्' ग. १७. 'तयोपासिकवातया रजकदुहित्रा' ख. १८. 'रजन्यां' क-पुस्तके नास्ति. १९. 'आभाति मे हृदयम्' ख. २०. 'संगिनौ' क. २१. 'प्रसादमधुराः' ख.

[1]प्रातर्विह्वलयन्ति नः [2]स्मृतिपथारूढा नि[3]गूढा मनः
कृत्याकृत्यविचारनिष्ठुरकथासंबन्धगन्धच्छिदः ॥ २४ ॥
(परिवृत्य।)

**दिगम्बरः**—अलेले भिक्खुआ, दूलं गच्छ। असदिसजादिफंसदूसिदो सि। (क)

**व्यसनाकरः**—धिङ्मूर्ख, जातिरेव नास्ति। तथा च [4]सुगतमतानुगं वचः।

एतासु [5]पञ्चस्ववभासिनीषु [6]प्रत्येकबोधस्फुटमण्डलीषु।
साधारणं षष्ठमिहेक्षते यः शृङ्गं शिरस्यात्मन ईक्षते सः ॥ २५ ॥

किं चास्मन्मते क्षणिकाः सर्वे भावाः। न ह्यात्मा स्थायीति। [7]तन्नः कुत्र रजकीदूषणम्।

**दिगम्बरः**—ता किं दिण्णो दोस उववण्णोत्थि णो वा। (ख)

**व्यसनाकरः**—[8]विनाशशीला भावा जायन्ते।

**दिगम्बरः**—अलेले भिक्खुआ, उप्पत्तिक्खणो विणासक्खणो त्ति पलम्पलाविलुद्धम्। ता भिण्णो उप्पत्तिक्खण्णो त्ति भिण्णो विणासक्खणो त्ति। (ग)

**[9]सभासलिः**— ([10]सहासम्।)

शृणोति श्रुतिहीनोऽपि जातिहीनोऽपि जातिमान्।
स्वीकृतक्षणभङ्गोऽपि जेतुमन्यं समीहते ॥ २६ ॥

---

(क) अरेरे भिक्षुक, दूरं गच्छ। असदृशजातिस्पर्शदूषितोऽसि।

(ख) तत्किं दत्तो दोष उपपन्नोऽस्ति न वा।

(ग) अरेरे भिक्षुक, उत्पत्तिक्षणो विनाशक्षण इति परम्पराविरुद्धम्। तद्भिन्न उत्पत्तिक्षण इति भिन्नो विनाशक्षण इति।

---

१. 'प्राप्य ध्यानकथा न च स्मृतिपथा–' क. २. 'श्रुति' ख. ३. 'निगूढासनाः' क-ख. ४. 'सौगतपादानुगं वचः' ख. ५. 'पञ्चस्वपि वस्तुधीषु' ख. ६. 'प्रत्यक्प्रबोधस्फुटभङ्गुरीषु' ख; 'प्रत्यक्षबोधं स्फुटमण्डलीषु' ग. ७. 'ततः क रजकीस्पर्शः' ख; 'तत्कुतो रजकीकुचस्पर्शः' ग. ८. 'विनश्वरस्वभावत्वं जातेः' ग. ९. 'बटुः' ग. १०. 'सहर्षम्' ख.

**व्यसनाकरः**—धिङ्मूर्ख, किमनेन [1]शब्दच्छलेन । अहं [2]पञ्चाख्यानपठनार्थं दन्तुरया समाहूतः । तत्किमनेन वृथा भिक्षुकलहेन ।

[3]**सभासलिः**—तत्किं तत्र गतो भवान् ।

[4]**व्यसनाकरः**—(अश्रुत्वैव मदनमञ्जरीमवलोक्य ।)

[5]किमपि किमपि कापि कापि लभ्या सखीभ्यः (?)
पृथुलशिथिलनेत्रप्रान्त[6]कान्तैर्वचोभिः ।
उषसि सुरतसंपत्ताण्डवाडम्बराणि
प्रथयति शिथिलाङ्गी कस्यचित्पुण्यभाजः ॥ २७ ॥

(ततः कलहं कृत्वा दिगम्बरेण निःसारितो व्यसनाकरः ।)

**दिगम्बरः**—(परिवृत्य ।) भो उवज्झाअ महाभाअ, हगे कामाउले । विवाहसद्धालुणी एसा वि कुट्टणी तरुणी व्व पडिहादि । ता मज्झ कदे पदाणेण पसीददु । मअणमञ्जरी उण तुम्ह अणुरत्ता भोदु । (क)

**सभासलिः**—(ततः संकेतस्थाने मदनमञ्जरीमवलोक्य स्वगतम् ।)

आयातासि कथं नमामि चरणौ [9]वासः स्खलत्यूरुतो
मामालिङ्ग्य मृगेक्षणे [10]क्षणमिह व्यालुप्यतां संभ्रमः ।
इत्यासन्नरतेस्तरङ्गितदृशः कम्पाकुलायाः पुन-
[11]स्तस्याः स्यादभिसार एष समयः [12]स्वप्नेऽपि शान्तिः कुतः ॥२८॥

(दिगम्बरं प्रति ।) युक्तमुक्तं भवता । किं तु दन्तुरां स्वीकारयामि तावत् ।

---

(क) भो उपाध्याय महाभाग, अहं कामाकुलः । विवाहश्रद्धालुरेषापि कुट्टनी तरुणीव प्रतिभाति । तन्मम कृते प्रदानेन प्रसीदतु । मदनमञ्जरी पुनर्युष्मदनुरक्ता भवतु ।

---

१. 'शब्दवाक्यच्छलेन' ख. २. 'सुरापानार्थं ख. ३. 'किमसुना शुष्कवादेन' ख; 'भिक्षोः शुष्ककलहेन' ग. ४. 'मिथ्याशुक्रः' ख. ५. 'किमपि ललितभावा कापि सभ्या' ख; 'किमपि किमपि जल्पन्त्येकतः...' ग. ६. 'कान्ता' ख. ७. 'मिथ्याशुक्रेन' ख. ८. 'कुट्टनीं' क-ख. ९. 'दासः स्खलत्यग्रतो' ग. १०. 'क्षणमिव व्याकुप्यतां विभ्रमः' क; 'व्यावर्त्यतां संभ्रमः' ग. ११. 'तेन स्यादपरोऽभिसारसमयः' ख. १२. 'स्वप्नेऽतिकान्तः कुतः' क; 'स्वप्नोऽपि शान्तक्रमः' ग.

([1]उपसृत्य।) दन्तुरे, त्वद्गुणाकृष्टोऽयं दिगम्बरस्त्वामभिलषति । त्वं चाद्यापि नवनवतिवर्षदेशीया युवतिः । तथाहि ।

निबि[2]डितनूपुरमधुराः कस्य निगूढा न सन्ति ते निश्चयः ।
रिपुरिव यदि न विसर्पति करकिसलयवलयझंकारः ॥ २९ ॥

तदनुष्ठीयतां युवयोर्विवाहः ।

**दन्तुरा**—(सलज्जम् ।) जं तुम्हाणं संमदं भोदि । (क)

**सभासलिः**—(सविमर्शं वि[3]षण्णं दिगम्बरमवलोक्य।) युक्तमुक्तं व्यासेन—

'वेपथुर्मलिनं वक्त्रं दीना वाग्गद्गदः स्वरः ।
मरणे यानि चिह्नानि तानि चिह्नानि याचके' ॥ ३० ॥

तद्विवाहाय समाहूयतां [5]जैङ्गमनामा चतुर्वेदः ।

([6]प्रविश्य ।)

**जङ्गमः**—[7]अद्य मग कुट्टनीविवाहव्याकृष्टस्य भुजाभ्यां गङ्गां समुत्तीर्य समागतस्य संध्यापि विस्मृता । अहह, आमन्त्रितस्यापि मे संध्यावन्दनासक्तस्य महती वेलातिक्रान्ता । तन्न युक्तम् । [8]तथा चाह भगवान्व्यासः—

'स्वकार्यव्याप्तेनापि धर्मः कार्योऽन्तरान्तरा ।
दाम्ना बद्धोऽपि हि भ्राम्यन्घासग्रासं करोति गौः' ॥ ३१ ॥

(उपसृत्य ।)

**क्षपणकः**—चउव्वेअ, तुम्ह चलणजुअलं पणमामि । (ख)

**चतुर्वेदः**—

दोषाकरमुखीमेनां दन्तुरां प्राप्य [9]चण्डिकाम् ।
भज त्वं शूलिनः कान्ति श्मशानाश्रमवासिनः ॥ ३२ ॥

(क) यद्युष्माकं संमतं भवति ।

(ख) चतुर्वेद, युष्मच्चरणयुगलं प्रणमामि ।

१. 'सरभसमुपसृत्य' ग. २. 'निपतन्नूपुर' ख. ३. 'याच्ञादीनं' ख. ४. 'तद्विवाहार्थमानीयतामनयोरुन्मत्तमानसयोः' ग. ५. 'दूगणनामा' ख. ६. 'ततः प्रविशति दूगणः । दूगणः' ख. ७. 'अद्य मया कुट्टनीविवाहे भोज्यभोजनार्थिना बुभुक्षितेन भुजाभ्यां कष्टेन गङ्गामुत्तीर्य समागतेन' ख. ८. 'अत एवोक्तं व्यासेन' ग. ९. 'चर्चिकाम्' ख-ग.

सभासलिः—भो भोः चतुर्वेद, सत्वरमनुष्ठीयतामनयोर्विवाहः ।

चतुर्वेदः—(सहासम् ।)

स्तनौ प्रचलितावस्या विमर्दार्तावधोमुखौ ।
विशुष्कस्य नितम्बस्य वार्तां कर्तुमिवोद्यतौ ॥ ३३ ॥

तदद्यैव ज्येष्ठानक्षत्रे शनैश्चराधिष्ठिते धनुषि लग्ने युक्तः स्यादनयोर्विवाहः ।

सभासलिः—तत्रैव वैधव्यं ध्रुवम् ।

चतुर्वेदः—उपरितनभागे यदा वैधव्यं तदा को दोषः ।

सभासलिः—साधूक्तम् ।

चतुर्वेदः—(दिगम्बरमर्कपुष्पैरलंकृत्य ।) तदुपसर्पतु तावदेनां वरवेषधारी करग्रहणाय दिगम्बरः ।

(ततः प्रविशति वरवेषधारी दिगम्बरः ।)

चतुर्वेदः—(स्वस्त्ययनार्थं पुष्पाक्षतान्यादाय ।)

जातस्य हि ध्रुवं मृत्युर्ध्रुवं जन्म मृतस्य च ।
तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ॥ ३४ ॥

दिगम्बरः—(कुट्टनीं प्रति शनैः ।) तुम्हे किं वेसामाई उत वेसा । जइ वेसा ता गहणकं लेहु । अह जइ वेसामाई ता अभिवादेमि । (क)

दन्तुरा—अण्णस्सिं समए भणिस्सदि । (ख)

(दिगम्बरः करग्रहणं कृत्वोपविशति ।)

सभासलिः—अस्मिन्कन्यादानसमये दक्षिणार्थं सुगन्धताम्बूलार्थं च पदंहडाग्रामो मया दत्तः । मधुपर्कार्थं विसहडाग्रामश्च ।

---

(क) यूयं किं वेश्यामाता उत वेश्या । यदि वेश्या तद्ग्रथनकं गृहाण । अथ यदि वेश्यामाता तदभिवादये ।

(ख) अन्यस्मिन्समये भणिष्यति ।

---

१. 'विमर्शयन्निव' ख. २. 'प्रपतितौ' क. ३. 'उत्सुकौ' क. ४. 'मिथ्याशुक्रः—तत्र वैधव्यं जायते' ख. ५. 'ध्रुवं' क-पुस्तके नास्ति. ६. उपरिभागे वैधव्यमस्तीति को दोषः' ख. ७. 'सभासलिः—साधूक्तम्' क-ग-पुस्तकयोर्नास्ति. ८. 'अर्कपुष्पैः' ख-ग-पुस्तकयोर्नास्ति. ९. 'परिक्रामति'. ख. १०. 'पुष्पाक्षतमादाय पठति' ख. ११. 'दवाडग्रामविहसडाग्रामौ तुभ्यमहं प्रदत्तवान्' ख.

**चतुर्वेदः**—भो भो उपाध्याय, ¹यावदाभ्यां लीलागारे रतिर्न दीयते तावत्कुतो यौतुककौतुकम् ।

**सभासलिः**—एतयोरत्र कौतुकागारे महाशय्या क्रियताम् । यो यत्र म्रियते तस्य तत्रैव ²दाहो युक्तः ।

**चतुर्वेदः**—(उभावप्यवलोक्य ।) अपनीतोऽस्य हट्टविलासिनीवि³मर्दैन विगन्धः । तदलं कालविलम्बेन । प्रदीयतां मे वैवाहिकी दक्षिणा ।

(दिगम्बरो हरीतकीयुगलमुपनयति ।)

**चतुर्वेदः**—(सकोपम् ।) अरे रे निर्लज्ज ⁴नग्नक लुञ्चितकेश दिगम्बर, अनेकव्रतोपवासनियमपरस्य शूद्रप्रतिग्रहनिवृत्तस्य चतुर्वेदाध्यायिनः शुक्लस्य महाब्राह्मणस्य मम दक्षिणाप्रलोपस्त्वया ⁵कर्तव्यः । तदेनामादाय ⁶यास्यामि । (इति ⁷परस्परं दक्षिणाकलहाकुलौ नृत्यतः ।)

**कुलव्याधिः**—(परिवृत्य ।)

विहसन्तकअन्तनहच्छेडा अहवा तिमिराणँ घडा णिविडा ।
भअवाणसमाणसमुल्लसिआ मिलिआ जमि रक्खसरक्खसिआ ॥ ३९ ॥
कलकङ्कणलम्भिअबाहुलदा घणकुन्तलआ मुहभूसणआ ।
वरिसा उण मेहजलाकुलिआ णिविडन्तपओहरमण्डलिआ ॥ ३६ ॥ (क)

(इति पुनर्नृ⁸त्यतः ।)

---

(क) विहसत्कृतान्तनखच्छेदा अथवा तिमिराणां घटा निबिडा ।
भगवत्समानं समुल्लसिता मिलिता यथा राक्षसराक्षसिकाः ॥
कनककङ्कणलम्भितबाहुलता घनकुन्तलका मुखभूषणकाः ।
वर्षाः पुनर्मेघजलाकुलिता निबिडितपयोधरमण्डलिताः ॥

---

१. 'यावदस्माकं न दीयते' ख. २. 'क्रियते दाहः' ख. ३. 'विमर्दनेन तयोर्गर्वः' ख; 'वेदिविमर्दनानयोर्गन्धः' ग. ४. 'नग्नक लुञ्चितकेश दिगम्बर' क-ग-पुस्तकयोर्नास्ति. ५. 'न कर्तव्यः' ख. ६. 'गच्छामि' क. ७. 'अन्योन्यं दक्षिणाकलहायमानौ नृत्यतः' क; 'दक्षिणार्थमन्योन्यं कलहायमानौ नृत्यतः' ग. ग-पुस्तके 'नृत्यतः' अस्मादनन्तरं 'भुक्ता हि मया गिरयः स्नातोऽहं वह्निना पिबामि वियत् । हरिहरहिरण्यगर्भा मत्पुत्रास्तेन नृत्तामि ॥' इत्यधिकमस्ति. ८. 'नृत्यति' ख; 'नृत्यन्त उत्पतन्ति' ग.

सभामलिः—

चुम्बन्तः सरसीमुखाम्बुजवनं पान्थप्रमोदच्छिदः
प्रोन्मीलन्नवमा[1]लिकापरिमलाः श्रीखण्डसंबन्धिनः ।
संभोगश्रमवैरिणः स्मरशरव्यापारवि[2]स्तारिणः
कर्णाटीभुजवल्लिबन्धविकलाः सर्पन्ति मन्दानिलाः ॥ ३७ ॥

[3]अपि च ।

भूदेवस्वस्तिवादस्तिरयतु दुरितं नीरु[4]जः सन्तु सन्तः
सन्तु प्रौढारिवीरव्रजविजयकलाशालिनः क्षोणिपालाः ।
आस्तां वि[5]द्वत्प्रकाण्डश्रवणपुटचमत्कारि काव्यं कवीना-
मस्तु व्यामोहशान्तिः सृजतु हृदि मुदं निश्चलां चन्द्रचूडः ॥३८॥

(इति निष्क्रान्ताः सर्वे ।)

दन्तुरापरिणयो नाम द्वितीयोऽङ्कः ।

## समाप्तमिदं लटकमेलकं नाम प्रहसनम् ।

---

१. 'मल्लिकासुरभिकाः' क. २. 'जीवातवः' ख. ३. 'अपि च' क-ख-पुस्तकयोर्नास्ति. ४. 'निर्जराः सन्तु तुष्टाः' ख. ५. 'विद्वच्चकोर' ख-ग.

# लटकमेलकस्थश्लोकानां सूची ।

